

# अथ वास्तुशांतिप्रयोगः प्रारभ्यते।

श्रीगणेशाय नमः॥अथ विश्वकर्मप्रकाशोक्तवास्तुशांतिः ॥ तत्रतावद्गृहप्रवे
शात्पूर्वेह्नि चंद्रसूर्यताराादिबलान्वितेज्योतिःशास्त्रोक्तसुमुहूर्त्ते प्रातःकृत्यंनिर्व
र्त्य शुद्धोभूत्वा पंचगव्यादिनागृहशुद्धिंविधाय गृहमध्ये यथावकाशं मंडपं
कृत्वा तन्मध्ये हस्तमितंचतुरस्रंसयोनित्रिमेखलंकुंडं चतुरंगुलोच्छ्रितंस्थंडि
लं वा कृत्वा तत्पूर्वे ऐशान्यां च हस्तमितवेदिद्वयंकुर्यात् । सर्वतोभद्रकरणेतु
मध्येसर्वतोभद्रं तस्यैशान्यांहस्तमात्रंनवग्रहपीठम् आग्नेय्यांमातृकापीठंनै
ऋत्यांवास्तुपीठंवायव्यांयोगिनीक्षेत्रपालपीठं च विधाय वास्तुशांतिंकुर्यात्
एवंयथाविधिमण्डपादिरचयित्वा सुमुहूर्त्तेपूर्वाह्णे यजमानोभार्यापुत्रादिभिः

वा० सह उष्णोदकेनमंगलस्नानंकृत्वाअहतशुक्लवासांस्यलंकारांश्चपरिधायनित्या शां०
वश्यकंसमाप्य धृतमंगलतिलकोगणपत्यादिदेवान्विप्रांश्चनमस्कृत्य शुभा
॥ २ ॥ सने प्राङ्मुख उपविश्य स्ववामतः पत्नींपुत्रांश्चोपवेश्य सपवित्रपाणिराचम्य
प्राणानायम्य शांतिपाठंपठित्वा । ॐ श्रीमन्महागणाधिपतयेनमः । श्रील
क्ष्मीनारायणाभ्यांनमः । उमामहेश्वराभ्यां०।ॐ सुमुखश्चैकदंतश्चेति गणेशा
दिदेवान्संस्मरेत्। ततो देशकालौसंकीर्त्य अद्य पुण्यतिथावमुकगोत्रोऽमुक
शर्मा ममगृहे सकुटुम्बस्य सपरिवारस्यसर्वारिष्टप्रशांत्यायुरारोग्यैश्वर्यसुख ॥ २
श्रीप्राप्त्यर्थं पुत्रपौत्रधनधान्यादिसंपत्प्रवृद्धये अभिलषितमनोरथसिद्ध्यर्थं

वास्तुकृतसर्वदोषोपशांतये शिख्यादिदेवताप्रीतये सनवग्रहमखांवास्तुशांतिं करिष्ये । तदंगत्वेनगणपतिपूजनं पुण्याहवाचनंमातृकावसोर्धारापूजनंवृद्धिश्राद्धाचार्यर्त्विग्वरणादिकर्मंकरिष्येइतिसंकल्प्य।गणपतिपूजनंस्वस्तिपुण्याहवाचनं मातृकावसोर्धारापूजनम् आयुष्यमंत्रजपंनांदीश्राद्धंचपूर्ववत्कृत्वा आचार्यमष्टौचतुरोवाऋत्विजश्चवृत्वावस्त्रालंकारादिभिः संपूजयेत्॥ततःआचार्यः।आचार्यकर्मंकरिष्येइतिसंकल्प्य।लाजमिश्रितगौरसर्षपान्गृहीत्वारक्षोघ्नमंत्रैर्दिग्रक्षणंकृत्वा पंचगव्येनपावमानसूक्तेनसर्वंग्रहंकर्मभूमिंकुंडमंडपयज्ञसंभारांश्चप्रोक्ष्य । भूमिपूजनंकुर्यात्॥ ततो वास्तुमंडलपश्चिमदिशिकुंडेस्थं

डिलेवापंचभूसंस्कारान्कृत्वातत्रवरदनामानमग्निंप्रतिष्ठाप्यईशानेग्रहवेद्याम्
अधिदेवप्रत्यधिदेवसहितान्ग्रहान्संस्थाप्य तदीशान्यां रुद्रकलशंसंस्थाप्य
दक्षिणवेद्याम् एकाशीतिपदात्मकेमंडलेवास्तुदेवताः स्थापयेत् ।तद्यथावेद्याः
पश्चिमतउपविश्य । आचम्य प्राणानायम्य । अद्येत्यादिदेशकालौसंकीर्त्य
अस्यवास्तोः शुभतासिद्ध्येवास्तुदेवतास्थापनंपूजनंचकरिष्ये।इतिसंकल्प्य।
मंडलचतुष्कोणेषु लोहशंकुचतुष्टयम्ईशानादिप्रदक्षिणक्रमेणरोपयेत्। तत्र
मंत्रः।विशंतुभूतलेनागालोकपालाश्चसर्वतः॥अस्मिन्गृहेऽवतिष्ठंतुह्यायुर्बलक
राःसदा॥१॥इतिमंत्रेणप्रतिदिशंनिखनेत्।प्रतिकीलमंत्रावृत्तिः॥ततःशंकूनांपा

॥ ३ ॥

एवं रोपणक्रमेणमाषभक्तदध्योदनेनबलिदानम् । तत्रमंत्राः । ईशान्याम् । रुद्रे
भ्यश्चैवसर्पेभ्योयेचान्येतत्समाश्रिताः । बलिंतेभ्यःप्रयच्छामिगृह्णंतुसततोत्सु
काः ॥ १ ॥ आग्नेये । अग्निभ्योऽप्यथ सर्पेभ्योयेचान्येतत्समाश्रिताः तेभ्योबलिं
प्रयच्छामिपुण्यमोदनमुत्तमम् ॥ २ ॥ नैर्ऋत्ये । नैर्ऋत्याधिपतिश्चैवनैर्ऋत्यां
येचराक्षसाः बलिंतेभ्यःप्रयच्छामिसर्वेगृह्णंतुमंत्रितम् ॥ ३ ॥ वायव्ये । वायव्याधि
पतिश्चैव वायव्यायेचराक्षसाः बलिंतेभ्यः प्रयच्छामिपुण्यमोदनमुत्तमम् ॥ ४ ॥
ततोवास्तुपीठोपरि कुंकुमादिनाहेमरूपशलाकयावा पश्चादारंभाःप्रगताःउद
क्संस्थाद्व्यंगुलांतराः समाः प्रणवादिनमोंतैर्देशनामभिर्दशरेखाः कुर्यात् ॥ ॐ

शांतायैनमः १ ॐयशोवत्यैनमः २ॐकांतायै॰ ३ ॐविशालायै॰४ॐप्राण
वाहिन्यै॰ ५ॐसत्यै॰ ६ॐसुमनायै॰ ७ ॐनंदायै॰ ८ॐसुभद्रायै॰ ९ ॐ
सुरथायैनमः १० इतिदशरेखाः कृत्वा । पुनःदक्षिणारंभाउदगंताःप्राक्संस्था
दशरेखाः कुर्यात् ॐ हिरण्यायैनमः १ ॐसुव्रतायै॰ २ ॐलक्ष्म्यै॰ ३ ॐ
विभूत्यै॰ ४ ॐविमलायै॰ ५ ॐप्रियायै॰ ६ ॐजनायै॰ ७ ॐज्वालायै॰ ८
ॐ विशोकायै॰ ९ ॐ विशदायैनमः १०एवम्एकाशीतिपदंवास्तुमंडलंभव
ति।ततस्तारेखागंधादिभिः संपूज्य ॐसर्वज्ञानक्रियाव्यक्तकमलासनाययोग
पीठायनमःइतिपीठोपरिपुष्पाक्षतचंदनंप्रक्षिपेत्॥ततःईशानकोणपदादारभ्य

प्रदक्षिणक्रमेणतंडुलपुंजेषुशिख्यादिपंचचत्वारिंशद्देवताःस्वस्वपदेषुप्रणवव्या
हृतिभिस्तत्तन्नाम्नाआवाह्यस्थापयेत् तद्यथा तत्र ईशानकोणपदे वास्तोः शि
रःस्थानेरक्तवर्णंशिखिनमेकपदं० ॐतमीशानंजगतस्तस्थुषस्पतिंधियञ्जिन्व
मवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥
ॐभूर्भुवःस्वः भोःशिखिन् इहागच्छइहतिष्ठ ॐशिखिनेनमः शिखिनमावाह
यामि इतिस्थापनम् ॥ १ ॥ तद्दक्षिणपदेदक्षिणनेत्रेपर्ज्जन्यंपीतवर्णं० ॥ ॐ
महाँऽइंद्रोवज्रहस्तः षोडशीशर्म्मयच्छतु हन्तुपाप्मानंयोस्मान्द्वेष्टि। उप
यामगृहीतोसिमहेंद्रायत्वैषतेयोनिर्महेंद्रायत्वा ॐभूर्भुवःस्वःभोःपर्जन्यइहाग

वा० च्छइहतिष्ठ ॐ पर्जन्यायनमः॥ २॥ तद्दक्षिणपदे तदधःपदे च दक्षिणश्रोत्रे शां०
॥ ६ ॥ द्विपदंपीतवर्णंजयंतं० । ॐधन्वनागा धन्वनाजिंजयेमधन्वनातीव्राः समदो
जयेम ॥ धनुः शत्रोरपकामं कृणोतिधन्वनासर्वाः प्रदिशोजयेम । ॐ भूर्भुवः
स्वः भोः जयन्त इहागच्छ इह० ॥३॥ तद्दक्षिणपदद्वयेदक्षिणांसेपीतवर्णंकुलि
शायुधम् । ॐमहाँ२ऽइंद्रोवज्रहस्त० ॐभूर्भुवः स्वः भोःकुलिशायुधइहागच्छ
इहतिष्ठ॥ॐकुलिशायुधायनमः॥४॥तद्दक्षिणपदद्वयेदक्षिणबाहौरक्तवर्णंसूर्यम्
ॐरश्मिमहँरिकेशःपुरस्तात् सविताज्योतिरुदयाँ२॥ऽअजस्रम्।तस्यपूषाप्रसवे ॥ ६ ॥
यातिविद्वान् सम्पश्यन् विश्वाभुवनानिगोपाः ॥ ॐ भूर्भुवः स्वः भोः सूर्य इहा

गच्छ० ॐसूर्यायनमः ॥५॥ तद्दक्षिणपदद्वये दक्षिणप्रबाहौ शुक्लवर्णं सत्यं० ।
ॐव्रतेनदीक्षामाप्नोति दीक्षयाप्नोतिदक्षिणाम्।दक्षिणाश्रद्धामाप्नोतिश्रद्धयास
त्यमाप्यते । ॐभूर्भुवःस्वःभोःसत्यइहा०ॐसत्यायनमः॥६॥ तद्दक्षिणपदद्वये
दक्षिणकूर्परे कृष्णवर्णंभृशम्० ॐभद्रं कर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभि
र्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहिदेवहितंयदायुः।ॐभूर्भुवः
स्वः भो भृश इहागच्छ० ॐभृशायनमः ॥ ७ ॥ तद्दक्षिणोपरिस्थितैकपदे
दक्षिणप्रबाहौकृष्णवर्णमाकाशम्०ॐवयंसोमव्रतेतवमनस्तनूषुबिभ्रतः।प्रजा
वन्तःसचेमहि । ॐभूर्भुवःस्वः भोआकाशइहागच्छ०ॐआकाशायनमः ॥

वा० ॥८॥ दक्षिणाग्नेयकोणपदे दक्षिणप्रबाहौ धूम्रवर्णंवायुं० । आवायो भूषशुचि शां० ३
॥ ६ ॥ पाऽउपनःसहस्रं ते नियुतोविश्ववार। उहोतेअन्धो मद्यमयामि यस्यदेवदधि
षेपूर्वंपेयम् वायवेत्वा । ॐभूर्भुवःस्वःभोवायो इहागच्छइहतिष्ठ । ॐवायवे
नमः ॥९॥ तत्पश्चिमैकपदेदक्षिणमणिबंधेरक्तवर्णपूषाणं० । ॐपूषन्तवव्रतेवयं
नरिष्येमकदाचन।स्तोतारस्तऽइहस्मसि । ॐ भूर्भुवः स्वः भो पूषन्निहागच्छ
इहतिष्ठ । ॐ पूष्णेनमः ॥१०॥ तदधः द्विपदेदक्षिणपार्श्वे शुक्लवर्णवितथम् ।
ॐ सविताप्रथमेऽहन्नग्निर्द्वितीयेवायुस्तृतीयऽआदित्यश्चतुर्थे चन्द्रमाः पञ्चम ॥ ६ ॥
ऋतुः षष्ठेमरुतः सप्तमेबृहस्पतिरष्टमे । मित्रोनवमेवरुणोदशम इन्द्रएकादशे

विश्वेदेवाद्वादशे ॐ भूर्भुवः स्वः भो वितथइहा० । ॐ वितथायनमः॥ ११॥
तत्पश्चिमपदद्वये दक्षिणपार्श्वे पीतवर्णंगृहक्षतम्० । सविता त्वा सवाना ᳪ सुवताम
ग्निर्गृहपतीना ᳪ सोमोवनस्पतीनाम् । बृहस्पतिर्वाचऽइन्द्रोज्यैष्ठ्यायरुद्रः पशु
भ्योमित्रःसत्योवरुणोधर्मपतीनाम्॥ॐ भूर्भुवः स्वः भोगृहक्षतइहा०॥ॐगृहक्ष
तायनमः ॥१२॥तत्पश्चिमपदद्वयेदक्षिणोरौ कृष्णवर्णंयमम्०।ॐयमायत्वाम
खायत्वासूर्यस्यत्वातपसेदेवस्त्वासवितामध्वानक्तुपृथिव्याःस ᳪ स्पृशस्पाहि ।
अर्चिरसिशोचिरसितपोसि । ॐ भूर्भुवःस्वः भोयमइहा० ॐयमायनमः॥
॥ १३ ॥ तत्पश्चिमपदद्वये दक्षिणजानुप्रदेशेरक्तवर्णंगंधर्वम्० । ॐ प्रतद्वो

वां० चेदमृतंतनुविद्वान्गन्धर्वो धामविभृतंगुहासत् । त्रीणिपदानिनिहितागुहास्य शां०
॥ ७ ॥ यस्तानिवेदसपितुः पितासत् । ॐ भूर्भुवःस्वः भोगंधर्वइहा० ॐ गंधर्वाय
नमः ॥ १४ ॥ तत्पश्चिमपदद्वयेदक्षिणजंघायां कृष्णवर्णंभृंगराजं० ।
ॐ सुपर्णःपार्जन्य आर्तिर्वाहसोदर्विदाते वायवे बृहस्पतये वाचस्पतये
पैङ्गराजोऽलजः आन्तरिक्षप्लवोमद्गुर्मत्स्यस्ते नदीपतयेद्यावापृथिवीयः
कूर्मः । ॐ भूर्भुवः स्वः भोः भृंगराजइहा० ॐ भृंगराजायनमः ॥
॥ १५ ॥ तत्पश्चिमोपरिस्थैकपदे दक्षिणस्फिचि पीतवर्णंमृगं० । ॐ त ॥ ७ ॥
द्विष्णोः परमंपदꣳसदापश्यन्ति सूरयः ॥ दिवीवचक्षुराततम् । ॐ भूर्भुवः

स्वर्भोंमृगइहा० ॐ मृगायनमः ॥ १६ ॥ तत्पश्चिमेनैर्ऋत्यकोणपदेपादयोः रक्तवर्णान्पितॄन् ॐ पितृभ्यः स्वधायिभ्यः स्वधानमः ॥ पितामहेभ्यः स्वधायिभ्यः स्वधानमः ॥ प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः ॥ अक्षन्पितरोमीमदन्तपितरोतीतृपन्तपितरः पितरः शुन्धध्वम् ॐ भूर्भुवः स्वर्भोः पितरइहागच्छतइहतिष्ठत ॐ पितृभ्योनमः॥ १७॥तदुत्तरैकपदेवामस्फिचिरक्तवर्णं दौवारिकं० ॐ द्रविणोदाः पिपीषतिजुहोत प्रचतिष्ठत। नेष्ट्रादृतुभिरिष्यतः॥ॐ भू०दौवारिकइहा०ॐदौवारिकायनमः॥१८॥ तदुत्तरपदेतत्प्राक्पदेचवामजंघायां शुक्लवर्णंसुग्रीवम्। ॐ सुषुम्णाःसूर्य्यरश्मि

श्चन्द्रमागंधर्वस्तस्यनक्षत्राण्यप्सरसोभेकुरयो नाम । सनऽइदंब्रह्मक्षत्रंपातु
तस्मैस्वाहावाट्ताभ्यः स्वाहा । ॐ भूर्भुवः स्वर्भो सुग्रीव इ० ॐ सुग्रीवा
यनमः ॥ १९ ॥ तदुत्तरपदद्वये वामजानौ रक्तवर्णपुष्पदंतं० । ॐ न
क्षत्रेभ्यः स्वाहा नक्षत्रियेभ्यः स्वाहाहोरात्रेभ्यः स्वाहार्धमासेभ्यः स्वाहा
मासेभ्यः स्वाहा ऋतुभ्यः स्वाहार्तवेभ्यः स्वाहा संवत्सरायस्वाहा द्यावा
पृथिवीभ्या ७ स्वाहा चंद्रायस्वाहा सूर्यायस्वाहा रश्मिभ्यःस्वाहा वसुभ्यः
स्वाहा रुद्रेभ्यःस्वाहादित्येभ्यः स्वाहामरुद्भ्यःस्वाहाविश्वेभ्योदेवेभ्यःस्वाहा
मूलेभ्यःस्वाहाशाखाभ्यःस्वाहा वनस्पतिभ्यःस्वाहापुष्पेभ्यः स्वाहाफलेभ्यः

स्वाहौषधीभ्यःस्वाहा ॐभू० पुष्पदंतइहा० ॐ पुष्पदंतायनमः ॥ २० ॥
तदुत्तरपदद्वयेवामोरौशुक्लवर्णवरुण० । ॐ इमम्मेवरुणश्रुधीहवमद्याचमृडय ।
त्वामवस्युराचके ॥ॐ भूर्भुवः स्वर्भोवरुणइहा० ॐ वरुणायनमः ॥२१॥ तदु
त्तरपदद्वयेवामपार्श्वे पीतरक्तवर्णं असुरम् ॥ ॐ येरूपाणिप्रतिमुंचमानाऽअ
सुराः संतः स्वधयाचरंति ॥ परापुरोनिपुरोयेभरन्त्यग्निष्टाँल्लोकात्प्रणुदात्य
स्मात् ॐभूर्भुवः स्वर्भो असुर इहा०ॐ असुरायनमः ॥ २२ ॥ तदुत्तरपदद्वये
वामपार्श्वे कृष्णवर्णं शोकं० । ॐ असवेस्वाहा वसवेस्वाहा विश्वेभ्यः स्वाहा
विवस्वते स्वाहा गणश्रियेस्वाहा गणपतयेस्वाहाभिभुवेस्वाहाधिपतयेस्वाहा

वा० शूषायस्वाहा सर्ठं सर्पायस्वाहाचंद्रायस्वाहाज्योतिषेस्वाहा मलिम्लुचायस्वा शां०
॥ ९ ॥ हादिवापतयेतेस्वाहा ॐ भू० भोः शोकइहा० ॐ शोकायनमः॥२३॥ तदुत्तरो
परिस्थैकपदेवाममणिबंधे पीतवर्णं पापं० ।ॐ सूर्यरश्मिर्हरिकेशः पुरस्तात्स
विता ज्योतिरुदयाँ२॥ऽअजस्रम्॥तस्यपूषाप्रसवेयातिविद्वान्सम्पश्यन्विश्वा
भुवनानिगोपाः ॐभू० भोः पाप इहा० ॐ पापायनमः ॥ २४ ॥ तदुत्तरवाय
व्यकोणपदेवामप्रबाहौ रक्तवर्णंरोगं० ।ॐ शिरोमेश्रीर्यशोमुखंत्विषिः केशा
श्चश्मश्रूणि राजामेप्राणोऽअमृतꣳसम्राट् चक्षुर्विराट्श्रोत्रम्॥ॐभू० भोरोग ॥ ९ ॥
इहा० ॐरोगायनमः॥२५॥तत्प्रागेकपदे वामप्रबाहौरक्तवर्णम् अहिं० ।ॐनमो

स्तुसर्पेभ्योयेके च पृथिवीमनु ॥ ये ऽअन्तरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः । ॐ
भूर्भुवःस्वर्भोअहेइहा० अहयेनमः॥ २६ ॥ तत्प्राक्पदेततोपिदक्षिणे चेतिपद
द्वये रक्तवर्णंमुख्यं० । ॐ इषेत्वोर्जेत्वावायवस्थदेवोवः सविता प्रार्पयतु
श्रेष्ठतमाय कर्मणऽआप्यायध्वमघ्न्याऽइन्द्राय भागम्प्रजावतीरनमीवाऽअय
क्ष्मामावस्तेनईशतमाघशᳫंसोध्रुवा अस्मिन् गोपतौस्यातबह्वीर्यजमानस्य
पशून्पाहि। ॐ भूर्भुवः स्वर्भोमुख्य इहा०ॐ मुख्यायनमः॥२७॥तत्प्राक्पदद्वये
वामबाहौ कृष्णवर्णंभल्लाटम् । ॐ बण्महाँ २॥ असि सूर्य बळादित्यमहाँ २॥
असि ॥ महते सतो महिमापनस्यतेद्धादेव महाँ २ ॥ असि ॥ ॐ भूर्भुवः

वा० स्वर्भोंभल्लाटइहा० भल्लाटायनमः ॥ २८ ॥ तत्प्राक्पदद्वयेश्वेतवर्णं शां०
॥१०॥ सोमं । ॐवयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः । प्रजावन्तः सचेमहि ॐ
भू० भोः सोमइहा० ॐ सोमायनमः ॥ २९ ॥ तत्प्राक्पदद्वयेवामांसे
कृष्णवर्णं सर्पम् ॥ ॐ उदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसू
र्यꣳस्वाहा ॐ भू० भोः सर्पइहा० ॐ सर्पायनमः ॥ ३० ॥ तत्प्राक्पद
द्वये वामश्रोत्रेपीतवर्णांमदितिं० ॐ उतनोहिर्बुध्न्यः शृणोत्वज एकपा
त्पृथिवीसमुद्रः । विश्वेदेवा ऋतावृधोहुवानस्तुता मंत्राः कविशस्ता अवन्तु ॥१०॥
ॐ भू० अदितेइहा० ॐअदितयेनमः ॥ ३१ ॥ तत्प्रागुपरिस्थेपदे वामनेत्रे

पीतवर्णां दितिं० ओं अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता सपिता सपुत्रः ।
विश्वेदेवाअदितिः पंचजनाऽअदितिर्जातमदितिर्जनित्वम् । ॐ भू० भोदिते
इहा० ॐ दितयेनमः ॥ ३२ ॥ ततः शिखिपदाधःस्थितकोणपदेमुखेशुक्लवर्णं
आपं० । ॐ आपोअस्मान्मातरःशुन्धयन्तुघृतेननो घृतवः पुनंतु । विश्वꣳ
हिरिप्रंप्रवहंति देवीरुदिदाभ्यः शुचिरापूतऽएमि ॐ भूर्भुवःस्वर्भो आपइहाग
गच्छत० । ॐ अद्भ्योनमः ॥ ३३ ॥ आग्नेयेवायुकोणपदादधःकोणपदे
दक्षिणहस्ते शुक्लवर्णं सावित्रं० । ॐ उपयामगृहीतोसिसावित्रोसिचनोधाश्च
नोधाऽअसिचनोमयिधेहि । जिन्वयज्ञंजिन्वयज्ञपतिंभगायदेवायत्वा सवित्रे

शा० ओंभू० भोः सावित्र इहा० ॐसावित्रायनमः॥ ३४ ॥ नैर्ऋत्येपितृपदा शां०
॥११॥ धःकोणपदेमेढ्रे श्वेतवर्णंजय० ओंमर्म्माणितेवर्मणाछादयामिसोमस्त्वा
राजामृतेनानुवस्ताम् ॥ उरोर्वरीयोवरुणस्तेकृणोतुजयन्तन्त्वानुदेवाम
दंतु। ॐ भूर्भोजयइहा० ॐ जयायनमः॥ ३५ ॥ वायव्ये रोगपदाधः
कोणपदेवामहस्तेरक्तवर्णंरुद्रं० । ॐ सुत्रामाणंपृथिवींद्यामनेहसꣳ सुश
र्माणमदितिꣳ सुप्रणीतिम् ॥ दैवींनावꣳ स्वरित्रामनागसमस्रवन्तीमा
रुहेमास्वस्तये ॐ भू० भोरुद्रइहा० ॐ रुद्रायनमः॥ ३६ ॥ ततोमध्यगत ॥११॥
नवकोष्ठकसंलग्नपूर्वपदत्रयेदक्षिणहस्तेनकृष्णवर्णं अर्यमणं० । ॐ अर्य्यमणं

बृहस्पतिमिद्रं दानाय चोदय वाचंविष्णु ७ सरस्वती ७सवितारंचवाजिनर्ठं
स्वाहा ॐभू० भोअर्यमन्निहा० ॐ अर्यम्णेनमः ॥ ३७ ॥ तद्दक्षिणाग्नेयकोण
पदे दक्षिणहस्तेरक्तवर्णं सवितारं० । ॐ उपयामगृहीतोसिसावित्रोसिचनोधा
श्चनोधाऽअसिचनोमयिधेहि । जिन्वयज्ञंजिन्वयज्ञपतिं भगायदेवायत्वासवि
त्रे ॐ भू० सवितरिहा० ॐ सवित्रेनमः ॥ ३८ ॥ तदधः पश्चिमपादत्रयेजठर
दक्षिणभागे शुक्लवर्णंविवस्वंतम् ॐ विवस्वन्नादित्यैषतेसोमपीथस्तस्मिन्मत्स्व
श्रदस्मैनरोवचसेदधातनयदाशीर्दादंपतिर्वाममश्नुतः । पुमान्पुत्रोजायते
विंदते वस्वधाविश्वाहारपऽएधतेगृहे। ॐ भू० भोविवस्वन्निहा० ॐ विवस्वतेन

मः ॥ ३९ ॥ तत्पश्चिमनैर्ऋत्यकोणपदेवृषणयोःरक्तवर्णं विबुधाधिपं० । ॐ 

इंद्रंसुत्रामास्वां २॥ऽअवोभिःसुमृडीकोभवतुविश्ववेदाः।बाधतांद्वेषोऽअभयंकृ
णोतु सुवीर्यस्य पतयः स्याम । ॐ भू० भोविबुधाधिपइहा० विबुधाधिपा
यनमः॥ ४० ॥ तदुत्तरपदत्रये जठरवामभागेश्वेतवर्णंमित्रं० । ॐतन्मित्रस्य
वरुणस्याभिचक्षेसूर्योरूपं कृणुतेद्योरुपस्थे ।अनन्तमन्यद्रुशदस्यपाजःकृष्ण
मन्यद्धरितः संभरंति । ॐभू० भोमित्र इहा० । ॐ मित्रायनमः॥४१॥तदु
त्तरैकपदेवामहस्तेरक्तंराजयक्ष्माणं० ॐ अभिगोत्राणिसहसागाहमानोदयो 
वीरःशतमन्युरिंद्रः॥दुश्च्यवनःपृतनाषाडयुध्योस्माकथंसेनाऽअवतुप्रयुत्सु॥

ॐ भू० भोराजयक्ष्मनिहा० ॐराजयक्ष्मणेनमः॥४२॥तत्प्राकपदत्रये वामह
स्ते रक्तवर्णंपृथिवीधरं०।ॐपृथिवीछन्दः अन्तरिक्षंछन्दःद्यौश्छंदः समाश्छंदः
नक्षत्राणिच्छंदःवाक्छंदः मलश्छंदः कृषिश्छंदःहिरण्यंछन्दःगौश्छन्दःअजा
छंदः अश्वश्छन्दः।ॐ भू० भोपृथ्वीधरइहा० ॐ पृथ्वीधरायनमः॥ ४३ ॥
तत्प्रागीशानकोणपदे उरसिशुक्लवर्णम् आपवत्सं०ॐआतेवत्सोमनोयमत्पर
माच्चित्सधस्थात् अग्नेत्वांकामयागिरः॥ ॐ भूर्भुवःस्वर्भोआपवत्स इहा०
ॐ आपवत्सायनमः॥ ४४ ॥ मध्येनवपदे वास्तोर्हृदयेनाभौचपीतश्वेतवर्णं
ब्रह्माणं० । ॐ आब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामाराष्ट्रेराजन्यः शूरऽइषव्यो

२

।० तिव्याधीमहारथोजायतांदोग्ध्रीधेनुर्वोढानड्वानाशुः सप्तिः पुरंधिर्योषाजि शां०
॥१३॥ ष्णूरथेष्ठाः सभेयोयुवास्ययजमानस्यवीरोजायतान्निकामेनिकामेनः पर्ज
न्योवर्षतुफलवत्योनऽओषधयः पच्यंतांयोगक्षेमोनः कल्पताम् ॐ भूर्भुवः
स्वर्भोब्रह्मन्निहागच्छइहतिष्ठ । ब्रह्माणमावाहयामिस्थापयामि ॐ ब्रह्मणे
नमः ॥ ४५ ॥ ततोमंडलस्यबाह्ये ईशानादिकोणेषु क्रमेण चरकीं १ विदारीं
२ पूतनां ३ पापराक्षसींच४ स्थापयेत् ॥ तद्यथा ईशान्यांधूम्रवर्णां चरकीम् ।
ॐ ईशावास्यमिदꣳ सर्वंयत्किंचजगत्यांजगत् । तेनत्यक्तेनभुंजीथामागृधः ॥१४
कस्य स्विद्धनम् । ॐभूर्भुवः स्वर्भो चरकि इहागच्छ इहतिष्ठ । ॐचरक्यै

नमः ॥ १ ॥ आग्नेय्यां रक्तवर्णां विदारीं० ॐ अग्निं दूतं पुरो दधे हव्यवाहमुपब्रुवे
देवाँ२॥ऽआसादयादिह॥ ॐ भू० भो० विदारि इहा० ॐ विदार्य्यैनमः ॥ २ ॥
नैर्ऋत्यां पीतहरितवर्णां पूतनां० । ॐ नमः स्रुत्यायचपथ्यायचनमः कात्याय
चनीप्यायचनमः कुल्यायचसरस्यायच नमोनादेयायच वैशंतायच ॥
ॐ भू० भोः पूतने इहा० ॐ पूतनायैनमः ॥ ३ ॥ वायव्ये कृष्णवर्णां पाप
राक्षसीं० ॐ वायव्यैर्वायव्यान्याप्नोतिसतेनद्रोणकलशम् कुंभीभ्याममम्भृणौसु
तेस्थालीभिःस्थालीराप्नोति ॐ भूर्भुवःस्वर्भोः पापराक्षसिइहा ० ॐ पापराक्ष
स्यैनमः ॥४॥ ततः पूर्वे रक्तवर्णं स्कंदम् । ॐ यत्रबाणाः संपतंतिकुमाराविशिखा

वा॰ इव॥तन्नऽइन्द्रोबृहस्पतिरदितिःशर्म्मयच्छतुविश्वाहाशर्म्मयच्छतु॥ ॐभूर्भुवः शां॰
॥१४॥ स्वर्भोःस्कंद स्कंदायनमः ॥१॥ दक्षिणे कृष्णवर्णम् अर्यमणं बृहस्पतिमिन्द्रं
दानायचोदय वाचंविष्णुᳪं सरस्वतीᳪं सवितारञ्चवाजिनᳪं स्वाहा। ॐ भू
र्भुवः स्वर्भोअर्यमन्निहा॰ अर्यम्णेनमः ॥ २ ॥ पश्चिमेरक्तवर्णं जृंभकं॰।
ॐ सरोभ्योधैवरमुपस्थावराभ्योदाशंवैशन्ताभ्योवैन्दं नड्वलाभ्यः शौष्कलं
पारायमार्गारमवाराय कैवर्तंततीर्थेभ्यआन्दंविषमेभ्योमैनाल ᳪ स्वनेभ्यः
पर्णकं गुहाभ्यः किरात ᳪ सानुभ्योजृम्भकंपर्वतेभ्यः किम्पुरुषम्। ॐ भूर्भुवः ॥१४॥
स्वर्भोजृंभक इहा॰ ॐजृंभकायनमः ॥ ३ ॥ उत्तरे पीतवर्णंपिलिपिच्छं॰

ॐ कास्विदासीत्पूर्वचित्तिः किꣳस्विदासीद्बृहद्वयः॥ कास्विदासीत्पिलिप्पिला
कास्विदासीत्पिशङ्गिला। ॐ भूर्भुवःस्वर्भोः पिलिपिच्छ इहागच्छइहतिष्ठ
ॐ पिलिपिच्छायनमः ॥ ४ ॥ पुनः पूर्वादिदिक्षु ॐ भूर्भुवः स्वर्भोगणेश
इहा॰ ॐ गणेशायनमः ॥ १ ॥ दक्षिणे ॐ भूर्भुवः स्वर्भोदुर्गे इहा॰ ॐ
दुर्गायैनमः ॥२॥ पश्चिमे॰ ॐभूर्भुवः स्वर्भोवायो इहा॰ ॐवायवेनमः॥ ३ ॥
उत्तरे ॐ भूर्भुवः स्वर्भोः बिभत्स इहा॰ ॐ बिभत्सायनमः ॥ ४ ॥पुनःपूर्वे।
ॐ भू॰ उग्रसेन इहा॰ ॐ उग्रसेनायनमः ॥ १ ॥ दक्षिणे ॐ भू॰ डामर
इहा॰ ॐ डामरायनमः ॥ २ ॥ पश्चिमे भू॰ महाकाल इहा॰ ॐमहाका

 लायनमः ॥ ३ ॥ उत्तरे ॐ भूर्भुवः स्वर्भो अश्विनौ इहागच्छतम्० ॐ 
 अश्विभ्यांनमः ॥ ४ ॥ पुनः पूर्वाद्यष्टदिक्षु । पूर्वे ॐ भूर्भुवः स्वर्भो
इंद्र इहागच्छ इहतिष्ठ ॐ इंद्रायनमः ॥१॥ आग्नेय्यां० ॐ भूर्भुवःस्वर्भो अग्ने
इहा० ॐ अग्नयेनमः ॥ २॥ दक्षिणे भू० यम इहा० ॐयमायनमः॥ ३ ॥
निर्ऋतौ ॐ भू०निर्ऋतेइहा० ॐ निर्ऋतयेनमः ॥ ४ ॥ पश्चिमे ॐ भूर्भुवः
स्वर्भोवरुण इहा० ॐ वरुणायनमः ॥५॥वायव्यां ॐ भू० भोवायोइहा० ॐ
वायवेनमः ॥६॥ उत्तरे ॐ भू० भोःकुबेर इहा० ॐकुबेरायनमः॥७॥ईशान्यां 
ॐभूर्भुवः स्वर्भो ईशान इहा० ईशानायनमः॥८॥ईशानपूर्वयोर्मध्ये ॐ भू०

रुद्रइहा० ॐरुद्रायनमः॥ ९ ॥ निर्ऋतिपश्चिमयोर्मध्ये ॐ भूर्भुवःस्वर्भोभूमे
इहागच्छइहतिष्ठ ।ॐभूम्यैनमः॥ १० ॥एवंशिख्यादिदेवानावाह्य।ॐमनोजूति
र्जुषतामाज्यस्यबृहस्पतिर्य्यज्ञमिमंतनोत्वरिष्ठं य्यज्ञर्ठसमिमन्दधातु ॥विश्वे
देवासऽइहमादयन्तामो ३म्प्रतिष्ठ ॥ १ ॥एषवैप्रतिष्ठानाम०२इतिप्रतिष्ठाप्य
पीठे अक्षतान् विकीर्य ॐवास्तुपीठदेवताभ्यो नमइतिप्रणमेत् । ततोमंडला
दीशान्यामुत्तरे वा ताम्रकलशंमृन्मयकलशंवास्थापयेत् ।तद्यथा । महीद्यौ
रितिभूमिंस्पृष्ट्वा । ॐमहीद्यौःपृथिवीचनऽइमंयज्ञम्मिमिक्षिताम्॥ पिपृतान्नोभ
रीमभिः ॥१॥ औषधयःसमिति यवान्क्षिप्त्वा॥ॐओषधयःसमवदंतसोमेन

वा० सहराज्ञा॥यस्मैकृणोतिब्राह्मणस्तठं राजन्पारयामसि॥२॥आजिघ्रमितिकल शां०
॥१६॥ शंस्थापयेत्।ॐआजिघ्रकलशम्मह्यात्वाविशंत्विन्दवः।पुनरूर्जानिवर्तस्वसा
नःसहस्रंधुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः३॥वरुणस्योत्तंभनमिति
जलंपूरयेत्। ॐवरुणस्योत्तम्भनमसि०॥४॥गंधद्वारामितिगंधंप्रक्षिपेत्। ॐ
गंधद्वारांदुराधर्षां०॥५॥याऽओषधीरितिसर्वौषधीः।ॐयाऽओषधीःपूर्वाजाता
देवेभ्यस्त्रियुगम्पुरा ॥ मनैनुबभ्रूणाहठंशतंधामानिसप्तच ॥ ६ ॥अश्वत्थेवेति
पंचपल्लवान्। ॐ अश्वत्थेवोनिषदनंपर्णेवोवसतिष्कृता ॥ गोभाजऽइत्किला ॥१६॥
सथयत्सनवथपूरुषम् ॥७॥ स्योनापृथिवीतिसप्तमृदः। ॐस्योनापृथिविनोभ

वान्त्क्षरानिवेशनी ॥ यच्छानः शर्म्मसप्प्रथाः ॥८॥ याःफलिनीरितिफलं० ।
ॐयाःफलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः॥बृहस्पतिप्रसूतास्तानोमुञ्च
न्त्वर्ठ० हसः ॥९॥ परिव्वाजपतिरितिपंचरत्नानि० । ॐपरिव्वाजपतिःकविरग्नि
र्हव्यान्न्यक्रमीत्॥ दधद्रत्नानिदाशुषे ॥ १० ॥ हिरण्यगर्भेतिहिरण्यं० । ॐ
हिरण्यगर्भः सम० ॥ ११ ॥ युवासुवासाइतिरक्तवस्त्रेण वेष्टयेत् । ॐ युवासुवा
साः परिवीतऽआगात्सऽउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवयऽउन्नय
न्तिस्वाध्योमनसादेवयन्तः ॥ १२ ॥ पूर्णादर्व्वीतिपूर्णपात्रमुपरिन्यसेत् । ॐ
पूर्णादर्विपरापतसुपूर्णापुनरापत॥वस्नेवविक्रीणावहाऽइषमूर्जर्ठ० शतक्रतो१३॥

श्रीश्चतेलक्ष्मीश्चेतिश्रीफलं पूगीफलंवा संस्थाप्य । ॐमनोजूतिर्जुषतेतिप्रति
ष्ठांकृत्वातत्र।ॐतत्त्वायामिब्रह्मणाव्वन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥
अहेडमानोव्वरुणेहबोध्युरुशर्ठंसमानऽआयुः प्रमोषीः ॥ ॐ वरुणं सांगं सप
रिवारमावाहयामि। ॐ भूर्भुवःस्वर्भोवरुण इहागच्छ इहतिष्ठ इत्यावाह्य। ॐ
अपांपतिवरुणायनमः इति षोडशोपचारैःसंपूजयेत् । ततोगङ्गाद्यावाहनम् ।
सर्वेसमुद्राः सरितस्तीर्थानिजलदानदाः । आयांतुममशांत्यर्थं दुरितक्षयकार
काः ॥ १ ॥ ततः—कलशस्यमुखेविष्णुः कंठेरुद्रःसमाश्रितः । मूलेतस्यस्थितो
ब्रह्मामध्येमातृगणाः स्मृताः ॥१॥ कुक्षौतुसागराः सर्वेसप्तद्वीपावसुंधरा । ऋ

शां० ॥१७॥

ग्वेदोथयजुर्वेदः सामवेदोप्यथर्वणः ॥ २ ॥ अंगैश्च सहिताः सर्वे कलशं तु समा
श्रिताः। इत्यभिमंत्र्य। देवदानवसंवादे मथ्यमाने महोदधौ ॥ ३ ॥ उत्पन्नो
सितदाकुंभ विधृतो विष्णुना स्वयम्। त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थि
ताः ॥ ४ ॥ त्वयि तिष्ठंति भूतानि त्वयि प्राणाः प्रतिष्ठिताः। शिवः स्वयं त्वमे
वासि विष्णुस्त्वं च प्रजापतिः ॥ ५ ॥ आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृ
काः ॥ त्वयि तिष्ठंति सर्वेपि यतः कामफलप्रदाः ॥ ६ ॥ त्वत्प्रसादादिमं यज्ञं क
र्तुमीहे जलोद्भव। सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ ७ ॥ इति कलशं प्रार्थ्य
तस्योपरि सुवर्णमयीं कृकलासाकारस्वरूपां वास्तुप्रतिमामग्न्युत्तारणपूर्वकं स

न्निधाय पट्टवस्त्रैराच्छाद्यततस्तंसकलदेवाधिष्ठितावयवमधोमुखमीशानकोण
शिरसंनैर्ऋत्यकोणस्थितपादं च यथाकारंवास्तुपुरुषंध्यायेत् । अग्न्युत्तारण
मंत्राःप्राणप्रतिष्ठामंत्रास्तु पूर्वमुक्ताः । ततःवास्तोष्पतेइतिमंत्रस्यवसिष्ठऋषि
स्त्रिष्टुप्छंदोवास्तुदेवताभूषवास्तुस्थापनेविनियोगः । ॐ वास्तोष्पतेप्रतिजानी
ह्यस्मान्त्स्वावेशोऽअनमीवोभवानः यत्त्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विपदे
शञ्चतुष्पदे १ ॐ भूर्भुवःस्वःभोवास्तुपुरुषमहाबलपराक्रमसर्वदेवाश्रितशरीरब्र
ह्मपुत्रसकलब्रह्माण्डधारिन् भगवन्निहागच्छइहतिष्ठ आगच्छभगवन्वास्तोस
र्वदेवैरधिष्ठित । भगवन्कुरुकल्याणंगृहेस्मिन्सन्निधोभव ॥ १ ॥ ॐ वास्तुपुरुषइह

स्वागतोभव सुप्रसन्नोभव वरदो भव इत्यावाह्य । ततोंगदेवताः शिख्यादीन् प्रत्येकंप्रणवादिनमोन्तेनमंत्रेणगंधादिभिर्मिलितोपचारैर्यथोक्तप्रकारेणवा एकत्रकांडानुसमयेन पदार्थानुसमयेनवापूजयेत्।तद्यथा।ॐ शिखिनेनमः।इदंपाद्यम् । एषोऽर्घः । इदमाचमनीयम्।इदंस्नानम् । इदंगंधम्।एतानक्षतान् । इमानि पुष्पाणिएषधूपःएषदीपः।एतानिनानाविधानिनैवेद्यानि। इदमाचमनीयम्। इदंतांबूलम् । इमां दक्षिणां चसमर्पयामि । एवंप्रयोगेणशिखिनंसंपूज्यक्रमेण पर्जन्यादीन्संपूजयेत् १ ॐ पर्जन्यायनमः २ॐजयंतायनमः३ ॐ कुलिशायुधायनमः४ ॐ सूर्याय० ५ ॐ सत्याय०६ ॐ भृशाय० ७ ॐ आकाशाय०

वा० ८ ॐ वायवे ० ९ ॐपूष्णे० १० ॐ वितथाय० ११ ॐ गृहक्षताय० १२ शां०
॥१९॥ ॐ यमाय० १३ ॐ गंधर्वाय० १४ ॐ भृंगराजा० १५ ॐ मृगा० १६
ॐ पितृभ्यो० १७ ॐ दौवारिकाय० १८ ॐ सुग्रीवाय १९ ॐ पुष्पदं
ताय० २० ॐ वरुणाय० २१ ॐ असुराय० २२ ॐ शोकाय० २३ ॐ
पापाय० २४ ॐ रोगाय० २५ ॐ अहये० २६ ॐ मुख्याय० २७ ॐभल्ला
टाय० २८ ॐसोमाय० २९ ॐसर्पाय० ३० ॐ अदितये० ३१ॐ दितये० ॥१९॥
३२ ॐ अद्भ्यो० ३३ ॐ सावित्राय० ३४ ॐ जयाय० ३५ ॐ रुद्राय० ३६
ॐ अर्यम्णे० ३७ॐ सवित्रे०३८ ॐ विवस्वते० ३९ ॐ विबुधाधिपाय०

४० ॐ मित्रायनमः ४१ ॐ राजयक्ष्मणे० ४२ ॐ पृथ्वीधराय० ४३ ॐ
आपवत्साय० ४४ ॐ ब्रह्मणेनमः ४५ मण्डलबाह्ये ॐ चरक्यैनमः १ ॐ
विदार्यै० २ ॐ पूतनायै० ३ ॐ पापराक्षस्यै० ४ ॐ स्कंदायनमः १ ॐ
अर्यम्णेनमः २ ॐ जृंभकाय० ३ ॐ पिलिपिच्छाय० ४ ॐ गणेशाय० ५
ॐ दुर्गायै० ६ ॐ वाताय० ७ ॐ बिभत्साय० ८ ॐ उग्रसेनाय० ९ ॐ
डामराय० १० ॐ महाकालाय० ११ ॐ अश्विभ्यांनमः १२ ॐ इंद्राय० १
ॐ अग्नये० २ ॐ यमाय० ३ ॐ निर्ऋतये० ४ ॐ वरुणाय० ५ ॐ वायवे०
६ ॐ कुबेराय० ७ ॐ ईशानायनमः ८ ॐ रुद्रायनमः ९ ॐ भूम्यैनमः

वा० १० एवं वास्तुमंडलदेवतानांपूजनंकृत्वा । इहस्थापितदेवताभ्यो इमानि शां०
॥२०॥ गन्धाक्षतपुष्पधूपदीपाच्छादननैवेद्यतांबूलदक्षिणादीनि समर्पयामि नमः।
यथाविभागंपूजनंवः स्वाहानमम इतिजलमुत्सृजेत् ।इत्यंगदेवताः संपूज्य
क्षमाप्य प्रधानवास्तुपुरुषं पुरुषसूक्तेनषोडशोपचारैः संपूजयेत् ॥ एवं
पूजयित्वाबलिदानंकुर्यात् । ॐ एह्येहिभगवन्वास्तो इमंमयोपनीतंबलिं
गृहाण ममगृहमच्छिद्रंकुरुसकलदुष्टग्रहभूतपिशाचवेतालब्रह्मराक्षसेभ्योरक्ष
रक्षस्वाहा इतिमंत्रेणसतांबूलदक्षिणाकंबलिंदत्त्वाप्रार्थयेत्॥यज्ञभागंप्रतीक्षस्व ॥२०॥
पूजांचैवबलिंमम । नमोनमस्तेदेवेशममस्वस्तिकरोभव । इतिप्रार्थ्यंह

स्तौपादौप्रक्षाल्यासनेउपविश्याचम्यअर्घ्यंदानंकुर्यात् ॐ पूज्योसित्रि
षुलोकेषु यज्ञरक्षार्थंहेतवे । त्वद्विनाचनसिध्यंतियज्ञदानान्यनेकशः
॥ १ ॥ अयोनेभगवन्भर्गललाटस्वेदसंभव । गृहाणार्घ्यंमयादत्तं वास्तोस्त्वा
मिन्नमोऽस्तुते ॥ २ ॥ इत्यर्घ्यंदत्त्वा । मंत्रहीनं क्रियाहीनं भक्तिश्रद्धासम
न्वितम् । यत्पूजितंमयादेवपरिपूर्णंतदस्तुमे ॥ १ ॥ नमस्तेवास्तु
देवेशसर्वविघ्नहरोभव । शांतिंकुरुसुखंदेहिसर्वान्कामान्प्रयच्छमे ॥ २ ॥
इतिप्रणमेत् । अथहोमः । तत्रतावत् । आचार्योब्रह्मोपवेशनादिसमिद्धोमांतं
कुशकण्डिकाकर्मंसमाप्यपायसचरुंश्रपयित्वाआज्यभागांतेकुंडदक्षिणतोय

जमानउपविश्यजलमादाय। ॐ अस्मिन्वास्तुशांतिकर्मणिइदंहविः सूर्यादिग्रहे
भ्यईश्वराद्यधिदेवताभ्योऽन्यादिप्रत्यधिदेवताभ्योगणेशादिपंचलोकपालेभ्य
इन्द्रादिदिक्पालेभ्यः शिख्यादिपिलिपिच्छांताभ्यस्त्रिपंचाशद्वास्तुदेवताभ्यः
शेषेणस्विष्टकृदादिपूर्वोत्तरांगदेवताभ्यश्चनममयथादैवतमस्त्वितिद्रव्यत्यागं
कुर्यात् ॥ ततआचार्यादयः सूर्यादिनवग्रहेभ्यः क्रमेणपूर्वोक्तार्कादिसमिच्चरुति
लाज्यद्रव्यैरष्टाष्टसंख्ययाहुत्वा ॥ तेनैवद्रव्येणअधिप्रत्यधिदेवताभ्यश्चतुश्चतुः
संख्ययाहुत्वाविनायकादिदिक्पालान्तेभ्यश्चपलाशोदुंबरान्यतमसमिच्चरुतिल
ज्यद्रव्येणद्विद्विसंख्ययाजुहुयुः। ततोवास्तुदेवानांहोमः। तावत् आज्याहुतयः।

ॐ इहरतिरिहरमध्वमिहधृतिरिहस्वधृतिःस्वाहाइदमग्नये० ।ॐ उपसृजंधरुणं मात्रे धरुणोमातरं धयन् ॥ रायस्पोषमस्मासु दीधरत्स्वाहा इदमग्नये० । ततः शिख्यादिभ्यः प्रणवादिस्वाहांतैस्तत्तदावाहनोक्तवैदिकैर्मंत्रैर्वानाममंत्रैः प्रत्येकमष्टाविंशतिर्वाष्टावाहुतीः समित्तिलपायसैर्जुहुयात् । अत्रसमिध औदुंबरस्यमुख्याः । तदभावे अश्वत्थादीनामपि सर्वाः समिधोमधुघृतक्षीरैर्युक्ताहोतव्याः । तिलाः कृष्णा एव । पयोगोरेव । ॐ शिखिनेस्वाहा १ इदंशिखिनेनमम । २८।८। ॐपर्ज्जन्यायस्वाहा २ इदं पर्जन्यायनमम २८।८। ॐ जयंतायस्वाहा ३ इदं जयंतायनमम ॥ २८।८। ॐ कुलिशायुधायस्वाहा४इदं०

वा० ॥२२॥ २८।८। ॐ सूर्याय स्वाहा ५ इदं० २८।८। ॐ सत्यायस्वाहाइदं० ६ ॐ भृ शां०
शायस्वाहाइदं० ७ ॐ आकाशायस्वाहाइदं० ८ ॐ वायवेस्वाहाइदं० ९
ॐपूष्णेस्वाहाइदं०१० ॐवितथायस्वाहाइदं०११ॐगृहक्षतायस्वाहाइदं० १२
ॐयमायस्वाहाइदं० १३ ॐ गन्धर्वायस्वाहाइदं० १४ ॐभृंगराजायस्वाहा
इदं० १५ ॐमृगायस्वाहाइदं०१६ ॐ पितृभ्यःस्वाहाइदं०१७ ॐ दौवारिका
यस्वाहाइदं० १८ ॐ सुग्रीवायस्वाहाइदं० १९ ॐ पुष्पदंतायस्वाहाइदं०
२० ॐ वरुणायस्वाहाइदं०२१ ॐ असुरायस्वाहाइदं०२२ॐ शोकायस्वाहा ॥२२॥
इदं० २३ ॐ पापायस्वाहाइदं० २४ ॐ रोगायस्वाहाइदं० २५ ॐअहयेस्वा

हाइदं० २६ ॐ मुख्यायस्वाहाइदं० २७ ॐ भल्लाटायस्वाहाइदं०२८ॐ सो
मायस्वाहाइदं० २९ ॐ सर्पायस्वाहाइदं ० ३० ॐ अदितयेस्वाहाइदं०३१ ॐ
दितयेस्वाहाइदं०३२ॐ अद्भ्यःस्वाहाइदं०३३ॐ सावित्रायस्वाहाइदं०३४ ॐ
जयायस्वाहाइदं०३५ॐ रुद्रायस्वाहाइदं० ३६ ॐ अर्यम्णेस्वाहाइदं० ३७ ॐ
सवित्रेस्वाहाइदं० ३८ॐ विवस्वतेस्वाहाइदं०३९ॐ विबुधाधिपायस्वाहाइदं०
४० ॐ मित्रायस्वाहाइदं० ४१ॐ राजयक्ष्मणेस्वाहा इदं० ४२ ॐ पृथ्वीधराय
स्वाहाइदं०४३ ॐ अपवत्सायस्वाहाइदं० ४४ ॐ ब्रह्मणेस्वाहा इदंब्रह्मणे ४५
२८।८। चरक्यैस्वाहाइदं० १ॐ विदार्यैस्वाहाइदं०२ॐ पूतनायैस्वाहाइदं ०३

शा० ॐपापराक्षस्यैस्वाहाइदं० ४ ॐस्कंदायस्वाहाइदं० ५ ॐ अर्यम्णेस्वाहाइदं० शां०
॥२३॥ ६ ॐ जृंभकायस्वाहाइदं० ७ ॐ पिलिपिच्छायस्वाहाइदं० ८ ॐ गणेशाय
स्वाहाइदं० ९ ॐदुर्गायैस्वाहाइदं० १० ॐधातायस्वाहाइदं० ११ ॐ बिभत्सा
यस्वाहाइदं० १२ ॐ उग्रसेनायस्वाहाइदं० १३ ॐ डामरायस्वाहाइदं० १४
ॐमहाकालायस्वाहाइदं० १५ ॐअश्विभ्यांस्वाहाइदं० १६ ॐइंद्रायस्वाहाइदं०
१७ ॐअग्नयेस्वाहाइदं० १८ ॐयमायस्वाहाइदं० १९ ॐनिर्ऋतयेस्वाहाइदं० २०
ॐवरुणायस्वाहाइदं० २१ ॐ वायवेस्वाहाइदं० २२ ॐकुबेरायस्वाहाइदं० २३ ॥२३॥
ॐईशानायस्वाहाइदं० २४ ॐरुद्रायस्वाहाइदं० २५ ॐभूम्यैस्वाहाइदं० २६

ततोहस्तेजलमादायअनेनहोमेनशिख्यादयोवास्तुदेवताःप्रीयंतामित्युत्सृजेत्
अथप्रधानवास्तुहोमः॥तत्रवास्तोष्पतयेतैरेवसमित्तिलपायसाज्यैरष्टोत्तरशत
माहुतीर्जुहुयात् । चतुर्भिर्मंत्रैस्तत्रैकैकेनमंत्रेणसप्तविंशतिराहुतयएवमष्टोत्तर
शतम्॥तद्यथावास्तोष्पतेइतिचतुर्णांवसिष्ठऋषिर्वास्तोष्पतिर्देवता त्रयाणां त्रि
ष्टुप्छंदोंत्यस्यगायत्रीछंदोहोमेविनियोगः । ॐ वास्तोष्पतेप्रतिजानीह्यस्मा
न्त्स्वावेशोऽअनमीवोभवानः यत्त्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विपदेशंचतु
ष्पदेस्वाहाइदं वास्तोष्पतयेनमम।१२७॥ॐवास्तोष्पते प्रतरणोनऽएधिगय
स्फानोगोभिरश्वेभिरिन्दो॥ अजरासस्तेसख्येस्यामपितेवपुत्रान्प्रतितन्नोजुष

वा०

॥२४॥

स्वशन्नोभवद्विपदे शञ्चतुष्पदे स्वाहा इदं वास्तोष्पतये २।२७ ॥ ॐवास्तोष्प
तेशग्मयासꣳसदातेसक्षीमहिरण्वयागातुमत्या ॥ पाहिक्षेमऽउतयोगेवरन्नो
यूयंपातः स्वस्तिभिः सदानः स्वाहा इदं वास्तोष्पतये ३। २७ ॐ अमीवहा
वास्तोष्पते विश्वारूपाण्याविशन् ॥ सखासुशेवऽएधिनः स्वाहा इदंवास्तोष्प
तये ४। २७। १०८॥ ततः स्थालीपाकेनषडाहुतयः॥ ॐअग्निमिन्द्रंबृहस्पतिं
विश्वान्देवानुपह्वये।सरस्वतींवाजिनंचवास्तुमेदत्तवाजिनःस्वाहाइदमग्नयेइन्द्रा
यबृहस्पतये विश्वेभ्यो देवेभ्यःसरस्वत्यैवाजिनेचनमम १ ॐसर्पदेवजनान्त्स
र्वान् हिमवंतꣳ सुदर्शनम् ॥ वसूंश्चरुद्रानादित्यानीशानंजगदैः सह ॥ एतान्

शां०

॥२४॥

सर्वान्प्रपद्येऽहंवास्तुमेदत्तवाजिनःस्वाहा॥इदंसर्प्पदेवजनेभ्योहिमवतेसुदर्शना
यवसुभ्योरुद्रेभ्य आदित्येभ्यःईशानायजगद्भ्यश्चनमम॥२॥ॐपूर्वाह्णमपराह्ण
ञ्चोभौमध्यंदिनासह॥प्रदोषमर्द्धरात्रञ्च व्युष्टांदेवींमहापथाम्॥एतान्सर्वान्प्रपद्ये
ऽहंवास्तुमेदत्तवाजिनःस्वाहा।इदं पूर्वाह्णायापराह्णायप्रदोषायअर्धरा त्रायव्युष्टा
यैदेव्यैमहापथायैचनमम३ ॐकर्त्तारञ्च विकर्त्तारंविश्वकर्माणमोषधीश्चवनस्प
तीन् ॥ एतान्सर्वान्प्रपद्येऽहंवास्तुमेदत्तवाजिनःस्वाहा।इदंकर्त्रेविकर्त्रेविश्वकर्म
णे ओषधीभ्योवनस्पतिभ्योनमम४ ॐ धातारंचविधातारं निधीनांचपतिंसं्स
ह॥एतान्सर्वान्प्रपद्येऽहं वास्तुमेदत्तवाजिनः स्वाहा॥इदंधात्रेविधात्रेनिधीनांप

तयेचनममम ५ ॐस्योनर्ठंशिवमिदंवास्तुदत्तंब्रह्मप्रजापतीसर्वाश्चदेवताःस्वाहा॥
इदंब्रह्मणेप्रजापतयेसर्वाभ्यो देवताभ्यश्चनममह्६ततोवास्तोष्पतेइत्युक्तैश्चतुर्भिं
र्मंत्रैरेकेनवक्ष्यमाणेनचप्रतिमंत्रमेकैकंबिल्वंतद्बीजंवाजुहुयात्॥अथपंचमंघृता
क्तंबिल्वंगृहीत्वा। वास्तोष्पतेध्रुवास्थूणामितिमंत्रस्यवसिष्ठऋषिर्वास्तोष्पतिर्दे
वताबृहतीछंदोहोमेविनियोगः। ॐवास्तोष्पतेध्रुवास्थूणार्ठंसत्रर्ठंसोम्यानाम्।
द्रप्सोभेत्तापुरांशश्वतीनामिंद्रोमुनीनांसखाशन्नोभवद्विपदेशंचतुष्पदेस्वाहा॥
इदंवास्तोष्पतये ५ इतिहस्तेनजुहुयात्। ततः पुनःशिख्यादिभ्योयथाशक्त्या
ज्याहुतीर्जुहुयात्।अनेनहोमेनवास्तुदेवताःप्रीयंतामितिजलमुत्सृजेत्। इतिवा

स्तुदेवानांहोमः। अथअघोरमंत्रेणवास्तुमर्मसंधानाय तिलयवैर्मधुघृताक्ताभि
रष्टोत्तरशतमष्टाविंशतिंवाजुहुयात् । ॐ अघोरेभ्योऽथघोरेभ्योघोरघोरतरे
भ्यः ॥ सर्वेभ्यः सर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः स्वाहा १०८पश्चात् श्री
सूक्तेनफलहोमःगुग्गुलुहोमः । एवंहोमंसमाप्याग्नेःस्थापितदेवतानांचोत्तरपू
जनंकार्यम् ॥ ततः स्थालीपाकेनस्विष्टकृद्धोमंकृत्वा ततोमहाव्याहृत्यादिप्रा
जापत्यांतानवाज्याहुतीर्हुत्वावास्तुमंडलाग्रेवक्ष्यमाणवलीन्दद्यात् । तद्यथा
पायसादिद्रव्यंगृहीत्वा। ॐशिखिनेएषपायसबलिर्नमम १ ॐपर्जन्यायएषपा
यसबलिर्नमम २ ॐ जयंतायएषपायसबलिर्नमम ३ ॐ कुलिशायुधायएष

 



पायसबलिर्नंमम ४ ॐ सूर्य्यायएषपायसबलिर्नंमम ५इत्येवंप्रयोगेणशिख्या
दिमंडलस्थापितदेवताभ्योबलीन्दत्त्वा ।अग्न्ययनस्यसमंताद्दिक्षुविदिक्षुच
दशदिक्पालानांदधिमाषभक्तबलयोदेयाः । ततोग्रहवेदिसमीपे ग्रहाणांबली
न्दत्त्वापश्चादेकस्मिन्पात्रेदध्योदनदीपरक्तचंदनरक्तपुष्पाक्षताज्यगुडकुल्मा
षयावकापूपबालक्रीडनकदाडिमफलरूप्यसुवर्णानि कृत्वा । स्वर्गपाताल
मर्त्येषुयेदेवावास्तुसंभवाः ॥ गृह्णंत्विमंबलिंह्यद्यंतुष्टायांतुस्वमंदिरम् १मातरो
भूतवेतालायेचान्येबलिकांक्षिणः । विष्णोःपारिषदायेचतेपिगृह्णंत्विमंबलि
म् २ पितृभ्यः क्षेत्रपालेभ्योयेचान्येभैरवादयः।तेसर्वेतृप्तिमायांतुवास्तुदोषः

प्रणश्यतु ३ इतिपठित्वावास्तुवेदिसमीपेबलिंदद्यात् । ततः पूर्ववत् क्षेत्रपा
लायचतुष्पथेचबलिदानंकृत्वा हस्तौपादौप्रक्षाल्याचामेत् । ततः पूर्णाहुति
होमः त्र्यायुषकरणम् । संस्रवप्राशनम् । पवित्राभ्यांमार्जनम् । अग्नौ
पवित्रप्रतिपत्तिः । ब्रह्मणेपूर्णपात्रदानम् । प्रणीताविमोकंचपूर्ववत्कृत्वा
होमंसमापयेत् । ततः कांस्यपात्रे अनुपहते उदुंबरपत्राणिसक्षीराणि
शाड्लंदूर्वांगोमयंदधिमधुघृतकुशयवांश्चसमभागान्कृत्वा आसनोपरिस्थाने
षुप्रोक्षणंकुर्यात् । ततः पूर्वेसंधौ ॐ श्रीश्चत्वायश्चपूर्वे संधौगोपायेतां
इतिमंत्रेणाभिमर्शनंकरोति । ततोदक्षिणेसंधौ ॐ यज्ञश्चत्वादक्षिणाचद

क्षिणेसंधौ गोपायेताम् इति अनंतरं पश्चिमेसंधौ अन्नंचत्वा ब्राह्मणश्चपश्चिमे
संधौगोपायेताम्। अथोत्तरेसंधावभिमृशति ॐ ऊर्क्चत्वासूनृताचोत्तरेसंधौ
गोपायेताम् ४ इतिचतुर्दिक्षुप्रोक्षयेत् । अथगृहान्निष्क्रम्यपूर्वदिशिउपति
ष्ठते तत्रमंत्रः। ॐ केताचमासुकेताचपुरस्ताद्गोपायेतामित्यग्निर्वैकेतादित्यः
सुकेतातौप्रपद्येताभ्यांनमोस्तुतौमापुरस्ताद्गोपायेताम् । १ । अथदक्षिण
दिश्युपतिष्ठते । दक्षिणतोगोपायमानं चमारक्षमाणाचदक्षिणतोगोपाये
तामित्यहर्वै गोपायमान ७ँ रात्रीरक्षमाणातेप्रपद्येताभ्यांनमोस्तुतेमादक्षि
णतोगोपायेतामिति २ अथ पश्चिमदिश्युपतिष्ठते। अथपश्चाद्दीदिविश्च मा

॥२७॥

जागृविश्वपश्चात् गोपायेतामित्यन्नंवैदीदिविः प्राणोजागृविस्तौप्रपद्येताभ्यो
नमोस्तुतौमापश्चाद्गोपायेतामिति ३ अथोत्तरदिश्युपतिष्ठते । अथोत्तरतो
ऽस्वप्नश्च मानवद्राणश्चोत्तरतोगोपायेतामितिचंद्रमावाअस्वप्नोवायुरनद्राण
स्तौप्रपद्येताभ्यां नमोस्तुतौमोत्तरतोगोपायेतामिति४ततोगीतवादित्रादिब
हुजनैःसहगृहेआगत्य द्वारशालायां घृतेनवसोर्द्धारांकुर्यात् । ततोवास्तु
मंडले ब्रह्मस्थाने सुरूपांदिव्याभरणभूषितांस्त्रीरूपांपृथिवींध्यात्वा धरायैनम
इतिमंत्रेणप्रपूजयेत् । सर्वदेवमयं वास्तुवास्तुदेवमयंपरमितिपठेत् । ततो
गृहंप्रागादितस्त्रिगुणीकृतरक्तसूत्रेणराक्षोघ्नेनसूक्तेनपावमानेनचवेष्टयेत् छिन्ने

सूत्रेऽशुभमम् । ततोदुग्धपूर्णया तथैवजलपूर्णयाचस्तनकुम्भ्यापूर्वोक्तसूक्त
द्वयेन ऋचंवाचमित्यनेनचधाराद्वयम् अविच्छिन्नंकुर्यात् कृणुष्वपाजः
प्रसितिन्नपृथ्वींयाहिराजेवामवाँ२ ॥ ऽइभेन॥तृष्वीमनुप्रसतिन्द्रूणानोस्तासि
विध्यरक्षसस्तपिष्ठैः १ तवभ्रमासऽआशुयापतंत्यनुस्पृशधृषताशोशुचानः।
तपूंष्यग्नेजुह्वापतंगानसंदितोविसृजविष्वगुल्काः २ प्रतिस्पशोविसृज
तूर्णितमोभवापायुर्विशोऽअस्याऽअदब्धः । योनोदूरेऽअघशंसोयोऽअन्त्य
ग्नेमाकिष्टे व्यथिरादधर्षीत् ३ उदग्नेतिष्ठप्रत्यातनुष्वन्यमित्राँ२ऽओषतात्ति
ग्महेते ॥ योनोऽअरातिंसमिधानचक्रेनीचातंधक्ष्यतसन्नशुष्कम् ४ ऊर्ध्वोभ

वप्प्रतिविद्ध्याद्ध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने ॥ अवस्थिरातनुहिया
तुजूनांजामिमजामिम्प्रमृणीहिशत्रून् । अग्नेष्ट्वातेजसासादयामि ५ इति
रक्षोघ्नसूक्तम् । ॐ पुनन्तुमादेवजनाः पुनन्तुमनसाधियः । पुनन्तुविश्वाभू
तानि जातवेदः पुनीहिमा । आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् ॥ भवावा
जस्यसङ्गथे२ शिरोमेश्रीर्यशोमुखंत्विषिः केशाश्चश्मश्रूणि ॥ राजामेप्राणोऽ
अमृतꣳ सम्राट्चक्षुर्विराट्श्रोत्रम् ३ जिह्वामेभद्रंवाङ्महोमनोमन्युःस्वराड्
भामः मोदाःप्रमोदाऽअंगुलीरंगानिमित्रम्मेसहः४ बाहूमेबलमिन्द्रियꣳह
स्तौमेकर्म्मवीर्यम् ॥ आत्माक्षत्रमुरोमम५ पृष्ठीर्म्मेराष्ट्रमुदरꣳसौग्रीवाश्चश्रो

शां० ॥२९॥

णी ॥ ऊरूऽअरत्नीजानुनीविशोमेंगानिसर्वतः ६ नाभिर्मेचित्तंविज्ञानम्पायु
र्मेपचितिर्भसत्॥आनंदनंदावांडौमेभगःसौभाग्यंपसःजंघाभ्यां पद्भ्यांधर्मो
स्मिविशिराजाप्रतिष्ठितः७पयःपृथिव्यांपयऽओषधीषुपयोदिव्यन्तरिक्षेपयो
धाः ॥ पयस्वतीः प्प्रदिशःसंतुमह्यम् ८इति पावमानसूक्तम्॥ॐऋचंवाचम्प्रप
द्येमनोयजुःप्रपद्येसामप्राणम्प्रपद्येचक्षुः श्रोत्रम्प्रपद्येवागोजःसहौजोमयिप्रा
णापानौ १यन्मेच्छिद्रञ्चक्षुषोहृदयस्यमनसोवातितृणम्बृहस्पतिर्मेतद्दधातु ॥२९॥
शन्नोभवतुभुवनस्यस्पतिः २भूर्भुवःस्वःतत्संवितुर्वरेण्यं० ३कयानश्चित्रआ

भुवद्वृतीसुदावृधःसखा ॥ कयाशचिष्ठयावृता ४ कस्त्वासत्योमदानाम्मर्ठंहिं
ष्ठोमत्सदन्धसः॥दृढाचिदारुजेव्वसु ५ अभीषुणःसखीनामविताजरितॄणाम् ॥
शतम्भवास्यूतिभिः ६ कयात्त्वन्नऽऊत्याभिप्रमन्दसेवृषन्॥कयास्तोतृभ्यऽ
आभर ७ इन्द्रोव्विश्वस्यराजति शन्नोऽअस्तुद्विपदेशञ्चतुष्पदे ८ शन्नोमित्रःशं
वरुणःशन्नोभवत्त्वर्य्यमा ॥ शन्नऽइन्द्रोबृहस्पतिःशन्नोव्विष्णुरुरुक्रमः ९ शन्नो
व्वातःपवताठंशन्नस्तपतुसूर्य्यःशन्नःकनिक्रदद्देवःपर्ज्जन्योऽअभिवर्षतु १० आहा
निशम्भवन्तुनः शठं रात्रीःप्रतिधीयताम् ॥शन्नऽइन्द्राग्नीभवतामवोभिःश

वा० न्नऽइन्द्रावरुणारातहव्याशन्नऽइन्द्रापूषणावाजंसातौशमिन्द्रासोमासुविताय
॥३०॥ शँय्योः ११शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये ॥शंय्योरभिस्रवन्तुनः १२ शां०
स्योनापृथिविनोभवान्नृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः १३आपोहि
ष्ठामयोभुवस्तानऽऊर्जेदधातन॥महेरणायचक्षसे १४योवःशिवतमोरसस्तस्य
भाजयतेहनः ॥ उशतीरिवमातरः १५ तस्माअरङ्गमामवोयस्यक्षयायजि
न्नवथ ॥ आपोजनयथाचनः १६द्यौःशान्तिरन्तरिक्षꣳशान्तिःपृथिवीशा ॥३०॥
न्तिरापःशान्तिरोषधयःशांतिर्व्वनस्पतयःशांतिर्विश्वेदेवाःशान्तिर्ब्रह्मशां

न्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि १७ दृते दृꣳह मा मि
त्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्॥ मित्रस्याहञ्चक्षुषा सर्वाणि भूतानि
समीक्षे। मित्रस्य चक्षुषा समीक्षामहे १८ दृते दृꣳह मा ज्योक्ते सन्दृशि जीव्या
सम् १९ नमस्ते हरसे शोचिषे नमस्ते ऽअस्त्वर्चिषे। अन्याँस्ते ऽअस्मत्तपन्तु हेत
यः पावको ऽअस्मभ्यꣳ शिवो भव २० नमस्ते ऽअस्तु विद्युते नमस्ते स्तनयित्नव
वे॥ नमस्ते भगवन्नस्तु यतः स्वः समीहसे २१ यतो यतः समीहसे ततो नो ऽअभयं
कुरु॥ शन्नः कुरु प्रजाभ्यो ऽभयन्नः पशुभ्यः २२ सुमित्रिया न ऽआप ऽओषध

वा० य÷सन्तुद्दार्म्मिमन्त्रियास्तस्मैसन्तुषोऽस्मान्द्वेष्टियञ्चवयन्द्विष्मः२३तच्चक्षुर्द्देवहितं शां०
॥३१॥ म्पुरस्ताच्छुक्रमुच्चरत्॥पश्येमशरदःशतञ्जीवेमशरदः शतꣳ शृणुयामशर
दः÷शतंप्रब्रवामशरदः शतमदीनाःस्यामशरदःशतम्भूयश्चशरदःशतात्२४
इतिऋचंवाचंसूक्तम्॥ ततोयजमानःस्थिरेलग्ने स्थिरांशेवागृहस्याग्नेयकोणे
आकाशपदेजानुपरिमितखातंखात्वातंगोमयेनोपलिप्यशुक्लचंदनपुष्पाक्षता
दिभिरलंकृत्यशाल्यादिसप्तधान्यानिदध्योदनसुवर्णशैवालतृणानिचप्रक्षिप्य ॥३१
ततोनवंकुंभमेकंजलपूर्णं शुक्लगंधाक्षतपुष्पादिभिरर्चितं यजमानोहस्तद्वयेना

दायजानुभ्यामवनींगत्वा ॐ नमोवरुणाय इतितज्जलेनखातंपूरयेत् । ततः
ॐ वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्जनीस्थोवरुणस्यऽऋतसदन्यसि
वरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद १ वरुणःप्राविताभुवंमित्रो
विश्वाभिरूतिभिः ।करतांनःसुराधसः २उरुंहिराजावरुणश्चकार०३इमम्मेऽव
रुणश्रुधीहवमद्याचमृडय । त्वामवस्युराचके ४ इतिमंत्रैर्गर्तमभिमंत्रयेत्तत्रा
वर्त्तेप्रदक्षिणेपुष्पेचोर्ध्वमुखेशुभम् । वैपरीत्येत्वशुभम् । ततोमृन्निर्मितपेटि
कायां सप्तधान्यदध्योदनशैवालफलपुष्पाणिप्रक्षिप्यतूर्यघोषेणपूर्वस्थापित
वृषवास्तुप्रतिमामानीय तस्यांसंस्थाप्य गंधादिभिःसंपूज्य । ॐपूजितोसिम

शा० यावास्तोहोमाद्यैरर्चनैः शुभैः ॥ प्रसीदपाहिविश्वेशदेहिमेगृहजंसुखम् १ वास्तु शां०
॥३२॥ पुरुषनमस्तेस्तुभूशय्याभिरतप्रभो । मद्गृहंधनधान्यादिसमृद्धंकुरुसर्वदा ॥२॥
इतिप्रार्थयेत् । ततः पेटिकामाच्छाद्य तस्मिन्गर्ते शनैर्निधाय । सशैलसागरां
पृथ्वीं यथावहसिमूर्द्धनि ॥ तथामांवहकल्याण संपत्संततिभिः सह ॥ १ ॥ इति
प्रार्थ्य तथैवमृदागर्तंपूरयेत् ॥ मृदाधिक्येउत्तमंफलं साम्येमध्यमं न्यूनत्वेऽ
शुभम् । ततोगर्त्तोपरिगोमयेनोपलिप्य गंधाक्षतपुष्पादिभिः संपूज्य पुनः प्रार्थ
येत् । भगवन्देवदेवेशत्वंपितासर्वदेहिनाम् ॥ यज्ञरूपेणभगवंस्त्वयाव्याप्तंचरा ॥३२॥
चरम् ॥ १ ॥ जानताऽजानतावापिशास्त्रोक्तंनकृतंहियत् ॥ तच्चसंपूर्णमेवास्तु

प्रसन्नोभवसर्वदा ॥ २ ॥ स्वागतंदेवदेवेश मद्भाग्यात्त्वमिहागतः ॥प्राकृतंत्वं
चमांदृष्ट्वाबालवत्प्रतिपालय ॥ ३ ॥ इष्टान्कामान्प्रयच्छत्वंदुरिष्टंचविनाश
य ॥ पुत्रपौत्रादिवृद्धिंचसततंकुरुदेवनः ॥ ४ ॥ यावच्चंद्रोनगाः सूर्यस्तिष्ठंति
प्रतिपादिताः ॥ तावत्त्वयात्रदेवेशस्थेयंभक्त्यानुकंपया ॥ ५ ॥ इतिसंप्रार्थ्य
नालिकेरंस्थापयेत् ।ततःआचार्यादयोयजमानंसपत्नीकंपुत्रपौत्रादियुतंपूर्ववत्
वैदिकैर्मंत्रैःसुरास्त्वामित्यादिपौराणैश्चशांतिकलशोदकेनाभिषिच्यसर्वौषधि
भिरनुलिप्यस्नापयेयुःअभिषेकानंतरंस्नानवस्त्राणित्यक्त्वाशुक्लमाल्यांबरधरो
धृतमंगलतिलकःसपत्नीकोयजमानःस्वासनेउपविश्य आचम्यआज्यावलो

वा० कनंकुर्यात् । ततःअग्नेःपश्चिमतआचार्यंसंपूज्यअलंकृतांसवत्सांगांवासोयुगं शां०
॥२३॥ चदक्षिणांदत्त्वा ब्रह्मर्त्विग्भ्योयथाशक्तिदक्षिणांदत्त्वा तेषामाशिषोगृह्णीयात्
ततः शिख्यादिवास्तुदेवतानांग्रहाणांचपूजांकृत्वाक्षमाप्यदेवताग्निविसर्जनंकु
र्यात् । उत्तिष्ठब्रह्मणस्पते० १ यांतुदेवगणाःसर्वेपूजामादायमामकीम् ॥
इष्टकामप्रसिद्ध्यर्थंपुनरागमनायच ॥ २॥ इतिदेवान्विसृज्य आचार्यहस्ते
कर्मप्रतिपाद्य अग्निंसंपूज्य।गच्छगच्छसुरश्रेष्ठइत्यग्निंविसृज्यग्रहपीठवास्तुपी
ठद्याचार्यायदद्यात्।एवंप्रथमेह्निवास्तुशांतिंविधायद्वितीयेह्निपूर्वाह्णएवसुमुहूर्ते ॥२३॥
गृहप्रवेशंकुर्यात सचेत्थम्।नवजलपूर्णंपल्लवोपेतंदूर्वायुतंसुगंधादिलिप्तंगंधपुष्प

मालादिभिरर्चितंवस्त्रवेष्टितंसफलंकलशमंजलिनागृहीत्वा यजमानोब्राह्मणा
न्वितः सपत्नीकः शुक्लमाल्यानुलेपनस्ताहृशपुत्रपौत्रादिसमेतः। सुशकुनसू
चिताभ्युदयः गोब्राह्मणपुरःसरस्तैःकृतस्वस्त्ययनोमंगलतूर्यगीतशांतिपाठे
नतोरणाद्यलंकृतंगृहं ॐ धर्मस्थूणाराजठं श्रीस्तूपमहोरात्रेद्वारफलकेइंद्रस्य
गृहावसुमंतो वरूथिनस्तानहंप्रपद्ये सहप्रजयापशुभिः सहयन्मे किंचिद
स्युपहूतःसर्वगणःसखायःसाधुसंवृत्तस्तांत्वाशालेरिष्टवीरागृहान्नःसंतुसर्व्वतः १
इतिपठन्प्रविशेत्। अथगृहप्रवेशांगद्वारशाखादिपूजनम्।स्थापितासिमयाशा
खेसुखदाऋद्धिदाभव। पूजितासिमयाभक्त्यास्थापिताच स्थिराभव १ इति

वा० द्वारशाखांप्रणम्यगंधादिभिः संपूज्य। पूर्वे ॐगणपतयेनमः।दक्षिणशाखायां शां०
॥३४॥ ॐधात्रेनमः। वामशाखायां विधात्रेनमः इतिपूजयेत् ॥ ततःस्तंभपूजनम्।
धारयत्वंमहाभागनिर्मितोविश्वकर्मणा॥स्थापितःशुभदोनित्यंममगेहक्षमोभ
व॥१॥इतिस्तंभंगंधादिभिः संपूज्य। दीपस्थाने दीपायनमःइतिदीपंपूजयेत्
ततोदक्षिणबाहौ ॐ दक्षिणबाहवेनमः। वामबाहौॐवामबाहवेनमः।चुल्लीस्था
नेॐगंधर्वायनमः।संधानभांडे ॐज्येष्ठायैनमः जलस्थानेॐवरुणायनमः।
पेषिण्याम् ॐसुभगायैनमः उलूखले ॐरौद्रपीठायनमः। मुसलेॐबलभ ॥३४॥
द्रप्रियायप्रहरणायनमः। शयनीये ॐकामायनमः। पृष्ठे ॐ पुन्नागायनमः

वंशेषु ॐ किन्नरायनमः गृहमध्ये ॐ क्षेत्रपालायनमः। करंडे ॐ रक्षोजनेभ्यो
नमः इतिगृहदेवान्संपूजयेत् गृहप्रवेशानंतरंप्रधानगृहमध्येधान्योपरितंकल
शंस्थापयेत् ।ततो गृहस्थैर्यार्थंपुण्याहंवाचयित्वा शतंशक्त्यावा ब्राह्मणान्भो
जयित्वा तेभ्यः शिवंवास्तु इतित्रिरुक्त्वाशिवंवास्तु इति विप्रास्त्रिर्ब्रूयुः। ततो
विप्राशिषोगृहीत्वा सपरिवारःसुहृद्युतोभुंजीत। एवंयः कुरुतेसम्यग्वास्तुपूजा
समाहितः॥ धनधान्यसमायुक्तोमोदतेचोत्तमैः सुतैः १ गृहादिकरणेयत्रनां
चिंतावास्तुदेवताः॥ तत्रशून्यंभवेत्सर्वंरक्षोविघ्नादिभिर्हरेत् २ तस्माद्वास्त्वर्च
नंकार्यंसम्यक्संपदमीप्सुभिः। वित्तशाठ्यंनकुर्वीतयदीच्छेत्क्षेममात्मनः ३

वा० इतिवास्तुशांतिप्रयोगः ॥ अथग्रंथकारान्वयवर्णनम् । वीकाख्यशार्दूलविनि शां०
॥३६॥ र्मितंयतोलोकेबिकानेरइतिप्रथांगतः। तदंतरेलेखपुरोपमेपुरेश्रीरत्नदुर्गेनृपदुर्गमे
शुभे ॥ १ ॥आसीद्वसिष्ठान्वयगौडविप्रो माध्यंदिनीयोबुधजीवराजः ॥ विवृ
द्धमानोविदुषांसमाजेसुज्ञैर्नरैः सर्वसमृद्धिभाजः ॥ २ ॥ तस्यात्मजाबाणमिता
स्तुसद्गुणाः सुवेदविद्याध्ययनेचनैपुणाः । आयातयातद्विजशुद्धचाङ्गणावीर्येण
संताडितवैरिसंगणाः ॥ ३ ॥ पंचेषुमध्येगुरुरामकृष्णोज्ञानेनस्वल्पीकृतसर्वतृ
षणः ॥ स्वबुद्धितःखंडितवैरिप्रश्नः सुभक्तिसंतर्पितदवकृष्णः ॥ ४ ॥तस्याभव ॥३६॥
न्नाममिताःसुपुत्राःस्वधर्मयामिस्वकलत्रमित्राःगृहेषुसंलेखितरम्यचित्राःश्री

कान्तपूजानिरताःपवित्राः ॥ ५ ॥इमानिनामानिभवंतितेषां चतुर्भुजाख्योवि
बुधोहिज्येष्ठः।कस्तूरिचंद्राभिधसज्जनोऽपरोऽभवद्गुणैर्मण्डितज्येष्ठरामः ॥६॥
तत्रस्थितामध्यमपङ्क्तिपादेकस्तूरिचन्द्राख्यमहत्सुशीलाः ॥ तेषांसुपुत्रावन
वद्यवंद्यविद्यान्वितौद्वौनितरामभूताम् ॥ ७ ॥ चतुर्थिलालाह्वयगीष्पतिमुखौ
सुज्ञौगुणेनार्दितदुष्टदर्पौ ॥ तत्रापिज्येष्ठेनमयाचतुर्थीलालेनग्रंथःसमकारि
शांतिदः ॥ ८ ॥बाणभूताङ्कचंद्रेऽब्दे १९५५विक्रमादित्यसंज्ञके ॥ तपसेशुक्ल
पंचम्यांग्रंथःपूर्णोऽभवच्छुभः ॥ ९ ॥ इति श्रीवीकानेरविषयान्तर्गतश्रीरत्न
गढनगरनिवासिना श्रीवसिष्ठकुलोद्भवेन श्रीरामकृष्णपौत्रेण श्रीकस्तूरीचंद्र

सूनुना श्रीमहादेवभक्तगौडपंडितश्रीचतुर्थीलाल ( चौथमल ) शर्मणा विरचिते चातुर्थीलालभास्करे महानिबंधे शांतिविधायके पंचमे प्रकाशे वास्तुशांतिकथनं नाम तृतीयं प्रकरणम् ॥ ३ ॥

॥ समाप्तोऽयं वास्तुशांतिप्रयोगो ग्रंथः ॥

---

इदं पुस्तकं मुम्बय्यां क्षेमराज-श्रीकृष्णदास-श्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणयन्त्रालये मुद्रयित्वा प्रकाशितम् ।
संवत् १९७८. शाके १८४३.

अथ वास्तुशांतियागोपकरणानि । कुंकुमकेशरचंदनानि । पुष्पाणिविचित्राणि।पुष्पमालाः। वस्त्राणि नानाप्रकाराणि । पीतकौशेयवस्त्रम् । पंचरजांसि । तंडुलाः । धूपदीपाः । नैवेद्यम्। मोदकपायससक्तुसराान्नमाषभक्तपूरिकापूपादि । नालिकेरफलानि । ऋतुफलानि । तांबूलानि। पूगीफलानि । यज्ञोपवीतानि । आचार्यादिवरणोपकरणानि स्वर्णमुद्रिकासनकमंडलुप्रभृती नि । ग्रहहोमार्थम् अर्कसमिधः८ पलाशसमिधः ८ खादर्यःस० ८अपामार्गस० ८पिप्पलम य्यः० ८ उदुंबरस० ८ शमीसमिधः८ दूर्वाः८कुशाः८ एताः सर्वाःप्रादेशमात्राःवास्तुहोमार्थं प्रादेशमात्रा अष्टोत्तरशतसंख्या औदुंबर्यःसमिधः। अधिदेवप्रत्यधिदेवलोकपालदिक्पालहोमा र्थंप्रत्येकमष्टौसंख्याकाःपालाश्यःसमिधः प्रादेशमात्राः । सर्वहोमार्थं तिलाःयवाःतंडुलाः घृतं गव्यम् । शर्करागुग्गुलवादिस्रुक्स्रुवादीनि यागोपकरणानि।पूर्णपात्रम्।ग्रहबल्यर्थंगुडौदनादि ।

वास्तुदेवताबल्यर्थंपायसादि । अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधसंभवाः पंचपल्लवाः।मुरामांसीव
चाकुष्ठशैलेयरजनीद्वयम्।शुंठीचंपकमुस्तेतिसर्वौषधिगणःस्मृतः।अश्वस्थानात् गजस्थानात्
वल्मीकात् नदीसागरसंगमात् शुष्कह्रदात् राजद्वारात् गोकुलाच्च सप्तमृदः । यवगोधूमतंडु
लतिलकंगुश्यामाकचणकेतिसप्तधान्यानि। दुग्धं,दधि,मधु,पंचामृतं,पंचगव्यम्,श्वेतसर्षपाः।
लाजाः । ताम्रकलशः १मृन्मयकलशाःवास्तुप्रतिमा सुवर्णमयी१स्वर्णशलाका,स्वर्णशकला
नि९त्रिगुणितरक्तसूत्रं कर्पूरं सिंदूरं गुडं गंगोदकं गोरोचनं कस्तूरिका हरिद्रा तैलं आम्रपल्लवाः
माला बिल्वफलानि९तद्बीजानि वा बिल्वपत्राणि मुद्गाःमाषाःकार्पासवर्तिकाः९०श्वेतरक्तव
स्त्रम् अगरु एला (इलायची) शैवालं कदलीस्तंभाः चत्वारो लोहकीलाः४ छायापात्रं श्वे
तरक्तपुष्पाणि रक्तचंदनं अपक्वमृन्मयकुंभः १ काष्ठपेटिका १पत्रावली कार्पासः आसनानि

गुलालं अभ्रक प्रणीता प्रोक्षणी आज्यस्थाली चरुस्थाली कांस्यकटोरिका पंचरत्नानि । द्राक्षा आमलकानि आचार्यादिदक्षिणा । ब्राह्मणभोजनं भूयसी दक्षिणा । इति ॥

इति वास्तुशांतियागोपकरणानि ।



जाहि-

# विक्रेयपुस्तकें-( वैदिकग्रंथ. )

| नाम. | की. रु. आ. |
| --- | --- |
| शुक्लयजुर्वेद (वाजसनेयी) संहिता–संपूर्ण कर्मकाण्डादिकमें अत्यन्त उपयोगी सर्वानुक्रमणिका अनुवाक प्रतिज्ञासूत्रयाज्ञवल्क्य शिक्षास्वरसहित अकारादि क्रमस्थ मन्त्रानुक्रमणिकासमेत स्थूलाक्षरोंमें शुद्धता पूर्वक उत्तमकागजोंमें ... .... | ४–० |

| नाम. | की. रु. आ. |
| --- | --- |
| शुक्लयजुर्वेदसंहिता--पंडित ज्वालाप्रसादमिश्र कृत "मिश्रभाषा भाष्य" सहित जिसमें मंत्रोंके ऋषि, छंद, देवता और विनियोग प्रतिमंत्रमें वर्णित है और कात्यायन श्रौतसूत्रोंका और प्राचीन भाष्योंका अभिप्राय लेकर मन्त्रार्थ बहुतही सुगम रीतिसे वर्णनकर | |

| नाम. | की. रु. आ. |
| --- | --- |
| उसकी विधिप्रमाण और अभिप्रायभी साथही साथ लिखे हैं ... ... | १६–० |
| ऋग्यजुस्सामाथर्वविधानम्–जपादि अनुष्ठानके लिये अवश्य संग्राह्य है ... | ०–२ |
| मंत्रसंहिता–शुक्लयजुर्वेद नित्यकर्मानुष्ठान व्यवहारोपयोगी मंत्रोंका अपूर्व संग्रह | ०–८ |
| रुद्री शुक्लयजुर्वेदी–षडंगन्याससहित | ०–५ |
| रुद्री शुक्लयजुर्वेदी–सभाष्य भाषाटीकासमेत | |

| नाम. | की. रु. आ. |
| --- | --- |
| जिल्द बँधी .... .... ... | १–४ |
| दंडक शुक्लयजुर्वेदी– ... ... | ०–५ |
| पितृसंहिता–श्राद्धादिकोंमें ब्राह्मण भोजनके समयमें पाठ करने योग्य ... | ०–२ |
| पुरुषसूक्तश्रीसूक्त–मूल नित्यपाठोपयोगी | ०–१ |
| पुरुषसूक्त–भाषाटीकासमेत ... ... | ०–५ |
| गृह्यसूत्र–( पारस्कराचार्यप्रणीत हरिहर भाष्यसहित ) जिस्में षोडशसंस्कारादिके | |

जाहि- रात।

| नाम. | की. रु. आ. |
| --- | --- |
| सूत्र और कारिका हैं ... | २-० |
| अष्टत्रिंशदुपनिषद्-रेशमीगुटका नित्यपाठोपयोगी जिसमें ईश-केन-कठ-प्रश्न-मुंड-मांडूक्य, तैत्तिरीय-ऐतरेय-छांदोग्य बृहदारण्यक, श्वेताश्वतरोपनिषद्, कैवल्य, जाबाल, गर्भनारायणाथर्वशीर्ष, नारायणोपनिषद्, बृहज्जाबालोपनिषद्, वज्रसूचिकोपनिषद् आदि एकत्र संग्रह कियागयाहै | १-८ |

| नाम. | की. रु. आ. |
| --- | --- |
| ईशावास्योपनिषद्-पंडित ज्वालाप्रसादमिश्रकृत भाषाटीकासमेत... ... | ०-४ |
| मुक्तिकोपनिषद्-भाषाटीका ... | ०-५ |
| कैवल्योपनिषद्-मूलमात्र ... | ०-१ |
| भवसंतारणोपनिषद्-भा. टी. सहित-स्वामी श्रीरामप्रपन्नजीकृत ... | ०-१२ |
| याज्ञवल्क्यशिक्षा-भा० टी० ... | ०-६ |

नाम. कीं.रु.आ.

## कर्मकांड प्रयोगादि ग्रंथ ।

प्रतिष्ठासंग्रह—प्रतिष्ठा करानेके लिये यह ग्रन्थ बहुतही उत्तम है पं० रामलालजीने चार किरणों ( प्रकरणों ) में निर्माणकियाहैयह समन्त्रक ग्रंथ सर्वसंग्रहोपयोगी है ... ४—०

संस्कारभास्कर—( शुक्लयजुर्वेदीय गर्भाधानादिसे लेके सब प्रकारके संस्कारोंकी विधि, प्रयोग और मंत्रसहित)सर्वत्रैवर्णिक यज्ञो-

नाम. कीं.रु.आ.

पवीतवालेको अति उपयोगी हैं ... ३—८

शांतिप्रकाश—इसमें पहिले गणपत्यादिपूजनपुण्याहवाचन कलशस्थापनादि और विनायकादि ३० शान्ति प्रयोग वास्तुशान्तिप्रयोगादि समंत्रक हैं... ... ३—०

गौडीयश्राद्धप्रकाशमहानिबंध—इसमें श्राद्धस्वरूप श्राद्धमें ब्राह्मण लक्षण महालयादिनिर्णय और श्राद्धप्रयोग क्षयाहश्राद्ध सं-

जाहि-

| नाम. | की.रु.आ. |
| --- | --- |
| कल्पश्राद्ध हैमश्राद्ध एकादशादिश्राद्ध मासिकश्राद्ध मघादिश्राद्ध नांदीश्राद्धादि बहुतसेश्राद्धऔरविष्णवादिपूजन पितृतर्पणादि अपूर्वसंग्रहहैचारों वर्णोंको उपयोगी है .... .... .... | ४—० |
| ग्रहशान्ति—(शुक्लयजुर्वेदोक्त) यज्ञोपवीत विवाहादि शुभकर्ममें बहुत उपयोगी है | ०—१० |
| नवग्रहविधानपद्धति—मनुष्यको ग्रह अरिष्ट होनेपर प्रत्येक ग्रहके स्तोत्रपाठादि पढनेको अवश्य लेना चाहिये .... .... | ०—६ |
| पूजापंकजभास्कर—( पांचोंदेवताओंके वैदिकमंत्रोंसे यथोपचारपूजा प्रकरण हैं ) | १—० |
| श्राद्धविवेक—सब प्रकारके श्राद्धकी विधि प्रमाणयुक्त ... ... ... | १—० |
| श्राद्धमयूख ... ... ... | ०—८ |
| व्रतोद्यापनकौमुदी—व्रतोंके उद्यापनमें अति उत्तम है ... ... ... | १—० |

रात-

| नाम. | की. रु. आ. |
|---|---|
| गयायात्रापद्धतिः–( गयाजीमें श्राद्धादि करनेकी विधि है ) ... ... | ०–४ |
| वासिष्ठीहवनपद्धतिः–इसमें कलशादिस्थापन गणपतिपूजन पुण्याहवाचन मातृकापूजन नांदीश्राद्ध ग्रहमखादि सुगमरीतिसे ह | ०–६ |
| लंबोदरीहवनपद्धतिः ... ... | ०–५। |
| विवाहपद्धति–मूल कन्यादानादि संकल्प चतुर्थीकर्मादि विषय हैं .... ... | ०–८ |

| नाम. | की. रु. आ. |
|---|---|
| विवाहपद्धतिमूल पं० चतुर्थीलालजीकृत | ०–६ |
| नित्यकर्मप्रयोगमाला–पं० चतुर्थीलालजीकृत .... .... ... | १–० |
| यज्ञोपवीतपद्धतिः–मूल इसमें यज्ञोपवीतका संपूर्ण संस्कार और वेदारंभादि विषय हैं | ०–३ |
| " तथा भाषाटीका ... .... | ०–८ |
| दशकर्मपद्धति–इसमें गर्भाधान पुंसवन सीमन्तोन्नयन नामकर्म निष्क्रमण अन्नप्राश- | |

जाहि- | रात-

| नाम. | की. रु. आ. |
|---|---|
| न चूडाकर्म कर्णवेध उपनयन वेदारंभ समावर्त्तन विवाह चतुर्थीकर्मादि विषय हैं | ०--१० |
| कुशकंडिकाभाष्य—इनमें कुंड और स्थंडिलादिकी विधि ब्रह्मास्थापन आदि विषय हैं | ०—४ |
| वेदोक्तशिवार्चनपद्धति—वैदिक मंत्रोंसे शिवजीका न्याससमेत सांगोपांगपूजाविधान प्रयोगसमेत ... ... ... | ०—४ |
| वृद्धिश्राद्ध—इसमें वृद्धिश्राद्धादिनिर्णय नान्दीमुखश्राद्ध अभ्युदयिकश्राद्धादिक प्रयोगहैं | ०-६ |
| सपात्रिकपार्वणश्राद्धप्रयोग—कन्यागत सूर्यस्थके अपरपक्षमें महालय श्राद्धप्रयोग मूलमात्र .... .... | ०—२ |
| " तथा भाषाटीका .... .... | ०—४ |
| " तथा संस्कृतटीका .... | ०—८ |
| सांवत्सरिकैकोद्दिष्टश्राद्धप्रयोग—( मृत- | |

| नाम. | की. रु. आ. | नाम. | की. रु. आ. |
|---|---|---|---|
| कोंके क्षयतिथिमें श्राद्धप्रयोग ) ''तथा भाषाटीकासमेत | ... ०—२ .... ०—३ | वरदगणेशपूजा--अर्थात् भाद्रपद शुक्ल चतुर्थीको गणेशपूजन प्रयोग | .... ०--२ |




यह पुस्तक खेमराज श्रीकृष्णदासने खेतवाडी ७ वीं गली खम्बाटा लैन, निज "श्रीवेंकटेश्वर" स्टीम्-प्रेस बम्बईमें अपने लिये छापकर यहीं प्रकाशित किया.

